# श्रीपवनजाष्टकम्

भवभयापहं भारतीपतिं भजकसौख्यदं भानुदीधितिम् ।
भुवनसुन्दरं भूतिदं हरिं भजत सज्जना मारुतात्मजम् ॥ १॥

अमितविक्रमं ह्यञ्जनासुतं भयविनाशनं त्वब्जलोचनम् ।
असुरघातिनं ह्यब्धिलङ्घिनं भजत सज्जना मारुतात्मजम् ॥ २॥

परभयङ्करं पाण्डुनन्दनं पतितपावनं पापहारिणम् ।
परमसुन्दरं पङ्कजाननं भजत सज्जना मारुतात्मजम् ॥ ३॥

कलिविनाशकं कौरवान्तकं कलुषसंहरं कामितप्रदम् ।
कुरुकुलोद्भवं कुम्भिणीपतिं भजत सज्जना मारुतात्मजम् ॥ ४॥

मतविवर्धनं मायिमर्दनं मणिविभञ्जनं मध्वनामकम् ।
महितसन्मतिं मानदायकं भजत सज्जना मारुतात्मजम् ॥ ५॥

द्विजकुलोद्भवं दिव्यविग्रहं दितिजहारिणं दीनरक्षकम् ।
दिनकरप्रभं दिव्यमानसं भजत सज्जना मारुतात्मजम् ॥ ६॥

कपिकुलोद्भवं केसरीसुतं भरतपङ्कजं भीमनामकम् ।
विबुधवन्दितं विप्रवंशजं भजत सज्जना मारुतात्मजम् ॥ ७॥

पठति यः पुमान् पापनाशकं पवनजाष्टकं पुण्यवर्धनम् ।
परमसौख्यदं ज्ञानमुत्तमं भुवि सुनिर्मलं याति सम्पदम् ॥ ८॥

।।इति श्रीपवनजाष्टकम्।।